एवं सा कपिलोक्तेन मार्गेणाविरहं परम् ।
आत्मानं ब्रह्म निर्वाणं भगवन्तमवाप ह ॥ ३० ॥

तद् वीरासीत् पुण्यतमं क्षेत्रं त्रैलोक्यविश्रुतम् ।
नाम्ना सिद्धपदं यत्र सा संसिद्धिमुपेयुषी ॥ ३१ ॥

तस्यास्तद् योगविधुतमाशु मर्त्यमभूत् सरित् ।
स्रोतसां प्रवरा सौम्य सिद्धिदा सिद्धसेविता ॥ ३२ ॥

कपिलोऽपि महायोगी भगवान् पितुराश्रमात् ।
मातरं समनुज्ञाप्य प्रागुदीचीं दिशं ययौ ॥ ३३ ॥

सिद्धचारणगन्धर्वैर्मुनिभिश्चाप्सरोगणैः ।
स्तूयमानः समुद्रेण दत्तार्हणनिकेतनः ॥ ३४ ॥

आस्ते योगं समाख्याय साङ्ख्याचार्यैरविष्टुतः ।
त्रयाणामपि लोकानामुपशान्त्यै समाहितः ॥ ३५ ॥

---

श्रवणसुखस्याप्यस्य प्रसङ्गस्य कदा नु समाप्तिरिति मन्दां शङ्कां परिहरंस्तद्देहस्य प्रारब्धकर्मनिर्वाणेन तस्याः श्रीनारायणप्राप्तिं वक्ति—**एवं सेति** । अविरहं सर्वगतम् । निर्वाणं प्रकृतिप्राकृतशरीररहितं निर्वृतं वा । हेत्यनेनेतिहाससमाप्तिं सूचयति[1] ॥ ३० ॥

पूर्वं शुक्लस्य हरेरश्रुबिन्दुनिपाताद् बिन्दुसरोनामाभूत्, इदानीमस्याः देवहूत्याः सिद्धपदहेतुत्वात् सिद्धपदमिति नामान्तरं वक्ति—**तद् वीरेति** । वीर विदुर ॥ ३१ ॥

तत्र तद्देहो दाहकाभावात् श्वसृगालगोचरश्चेत् लोकहितैषणक्षेत्रस्तुतिर्व्यर्था स्यादिति तत्राह—**तस्या इति** । तन्मर्त्यं शरीरं स्रोतसां नदीनां प्रवरा सरित् ॥ ३२ ॥

पूर्वं कपिलगमनस्य कर्म नोक्तमधुना तत्पूर्वं तद्गमनं वक्ति—**कपिलोऽपीति** । महायोगी पूर्णज्ञानी प्रागुदीचीं दिशं शङ्कररक्षिताम् ॥ ३३ ॥

दत्ते अर्हणनिकेतने पूजादिनिवासस्थाने यस्मै स तथा ॥ ३४ ॥

योगं ध्यानलक्षणं प्राणायामलक्षणं वा । सांख्याचार्यैः यथार्थज्ञानोपदेष्टृभिः सनकादिभिः । नायं योगः स्वप्रयोजनोपदेशार्थः[2] । किन्तु लोकसुखार्थं इत्याह—**त्रयाणामिति** । उपशान्त्यै मङ्गलाय ॥३५॥

---

[1] हेत्यास्वादने—इति यादुपत्यम् । [2] स्वप्रयोजनार्थं इति स्यात् ।

मैत्रेय उवाच —

एतन्निगदितं तात यत् पृष्टोऽहं त्वयाऽनघ ।
कपिलस्य च संवादो देवहूत्याश्च पावनः ॥ ३६ ॥

य इदमनुश्रुणोति योऽभिधत्ते
कपिलमुनेर्मतमात्मयोगगुह्यम् ।
भगवति कृतधीः सुपर्णकेता-
वुपलभते भगवत्पदारविन्दम् ॥ ३७ ॥

इति श्रीमद्भागवते तृतीयस्कन्धे चतुस्त्रिंशोऽध्यायः ।

॥ इति तृतीयस्कन्धः ॥

---

मैत्रेयो विदुरं संबोधयंस्तत्प्रश्नपरिहारकथनमुपसंहरति — **एतन्निगदितमिति** । न केवलं देवहूत्या एव सिद्धिहेतुः, किन्तु लोकस्य चेति चार्थः ॥ ३६ ।

श्रोत्रादीनां क्षिप्रप्रवृत्त्यर्थं श्रवणादिफलमाह— **य इदमिति** । आत्मयोगगुह्यं परमात्मप्राप्ति-साधनोपायानां मध्ये रहस्यम् । यः सुपर्णकेतौ गरुडध्वजे भगवति कृतधीः श्रवणादिनेदं मतं अभिधत्ते अभ्यस्यति, स च भगवत्पदारविन्दमुपलभतेऽपरोक्षीकरोति ॥ ३७ ॥

सुनीलनीरदश्यामं सच्चिदानन्दविग्रहम् ।
रमारमणमीशेशं विठ्ठलं समुपास्महे ॥ १ ॥

पदरत्नावली नाम तृतीयस्कन्धकाशिनी ।
वनमालेव देवेश तव कण्ठे विराजताम् ॥ २ ॥

तृतीयस्कन्धमारुह्य गिरीन्द्रमिव गह्वरम् ।
अवरूढे मयि स्निग्धाः कृपां कुर्वन्तु साधवः ॥ ३ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
तृतीयस्कन्धे चतुस्त्रिंशोऽध्यायः ।

॥ इति तृतीयस्कन्धटीका ॥

## शुद्धिपत्रिका

| पृष्टम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९ | ६ | लेभेऽज्जसा | लेभेऽञ्जसा |
| १२ | ६ | ह्यपैक्षत | ह्युपैक्षता |
| १९ | १७ | साम्यातिशयो | साम्यातिशयौ |
| २३ | २ | स्वभाग जह्रे | स्वभागं जह्रे |
| ३१ | ५ | निषण्णय | निषण्णाय |
| ६७ | १६ | दुष्प्रतिवादम् | दुष्प्रतिपादम् |
| ७३ | ५ | तारणां | ताराणां |
| ७७ | ४ | सांख्यायनायाग | सांख्यायनायांग |
| ७९ | २३ | अर्थे नाभिद्यत | अर्थेनाभिद्यत |
| ८३ | १५ | अविमिश्रितेत्रेषु | अविमिश्रितेषु |
| ८५ | ४ | अव्यक्तमूल | अव्यक्तमूलं |
| ९२ | २१ | वपुर्नन्वनुमते | वपुर्नन्वमनुमतं |
| ११९ | ११ | विशेष इति | अविशेष इति |
| १३८ | ८ | पातुमहती | पातुमर्हती |
| १३७ | २२ | यद् यथा | यद् यया |
| १४१ | १८ | तीयया | तृतीयया |
| १४८ | १० | स्वस्थः | खस्थः |
| १५१ | १९ | रसाय उत्थिताः | रसाया उत्थितः |
| १७४ | ७ | कामदुघैर्दुमैः | कामदुघैर्द्रुमैः |
| १८० | २७ | निविविषुः | निविविशुः |
| १९२ | १० | शङ्करादापि | शङ्कराद्वापि |
| २०५ | ९ | भगणाश्चपि | भगणाश्चापि |
| २०८ | १२ | श्वभिर्वृत्तः | श्वभिर्वृतः |
| २१३ | १ | अहिवच्छवासं | अहिवच्छ्वासं |

| पृष्टम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| २२९ | १ | प्रमुखतोऽसजत् | प्रमुखतोऽसृजत् |
| २३८ | ६ | खेऽवस्थित | खेऽवस्थितं |
| २४५ | ७ | यथा | यया |
| २६१ | ६ | ब्रुवाणममबला | ब्रुवाणमबला |
| २६७ | १७ | बिभ्राजे | बभ्राजे |
| २७९ | १६ | वसुदेवक्षत्रिय | वसुदेवादिक्षत्रिय |
| २९३ | १७ | नित्यनिवृतम् | नित्यनिर्वृतम् |
| २९७ | १२ | अथ | अत |
| ३०० | १७ | ज्जन्यस्थूल | तज्जन्यस्थूल |
| ३०३ | २३ | एतच्च विंशतिकं | एतच्चतुर्विंशतिकं |
| ३०६ | १७ | नाम्ना | नाम्नां |
| ३१२ | १५ | यथा | यया |
| ३१४ | १३ | भूभावेव | भूमावेव |
| ३४५ | २२ | धर्मादिभिरनुष्ठिते: | धर्मादिभिरनुष्ठितैः |
| ३४६ | ९ | गुण | गुणा |
| ३४८ | १३ | मुक्तो | मुक्तौ |
| ३६५ | ५ | उद्धिरिश्य | उद्धरिष्य |